# श्रीहर्यष्टकम्

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ।।

स गङ्गा स गया सेतुः स काशी स च पुष्करम् ।
जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम् ।।

वाराणस्यां कुरुक्षेत्रे नैमिशारण्य एव च ।
यत्कृतं तेन येनोक्तं हरिरित्यक्षरद्वयम् ।।

पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।
तानि सर्वाण्यशेषाणि हरिरित्यक्षरद्वयम् ।।

गवां कोटिसहस्राणि हेमकन्यासहस्रकम् ।
दत्तं स्यात्तेन येनोक्तं हरिरित्यक्षरद्वयम् ।।

ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ।
अधीतस्तेन येनोक्तं हरिरित्यक्षरद्वयम् ।।

अश्वमेधैर्महायज्ञैः नरमेधैस्तथैव च ।
इष्टं स्यात्तेन येनोक्तं हरिरित्यक्षरद्वयम् ।।

प्राणप्रयाणपाथेयं संसारव्याधिनाशनम् ।
दुःखात्यन्त परित्राणं हरिरित्यक्षरद्वयम् ।।

बद्धपरिकरस्तेन मोक्षाय गमनं प्रति ।
सकृदुच्चारितं येन हरिरित्यक्षरद्वयम् ।।

हर्यष्टकमिदं पुण्यं प्रातरुत्थाय यः पठेत् ।
आयुष्यं बलमारोग्यं यशो वृद्धिश्श्रियावहम् ।।

प्रह्लादेन कृतं स्तोत्रं दुःखसागरशोषणम् ।
यः पठेत्स नरो याति तद्विष्णोः परमं पदम् ।।

।। श्री हरिः ।।

# कृष्णाष्टकम्

अतसीपुष्पसङ्काशं हार-नूपुर-शोभितम्
रत्न-कङ्कण-केयूरं कृष्णं वन्दे जगद्गुरुम् ॥
कुटिलालक-संयुक्तं पूर्णचन्द्र-निभाननम्
विलसत्-कुण्डलधरं कृष्णं वन्दे जगद्गुरुम् ॥
मंदारगन्ध-संयुक्तं चारुहासं चतुर्भुजं
बर्हि-पिच्छावचूडाङ्गं कृष्णं वन्दे जगद्गुरुम् ॥
उत्फुल्लपद्म-पत्राक्षं नीलजीमूत-सन्निभम्
यादवानां शिरोरत्नं कृष्णं वन्दे जगद्गुरुम् ॥
रुक्मिणीकेली-संयुक्तं पीताम्बर-सुशोभितम्
अवाप्त-तुलसीगन्धं कृष्णं वन्दे जगद्गुरुम् ॥
गोपिकानां कुचद्वन्द्व-कुङ्कुमाङ्कित-वक्षसम्
श्रीनिकेतं महेष्वासं कृष्णं वन्दे जगद्गुरुम् ॥
श्रीवत्साङ्कं महोरस्कं वनमाला-विराजितम्
शङ्कचक्र-धरं देवं कृष्णं वन्दे जगद्गुरुम् ॥
कृष्णाष्टकं-इदं पुण्यं प्रातरुत्थाय यः पठेत्
कोटिजन्म-कृतं पापं स्मरणेन विनश्यति ॥